# पुनः स्मारणम्

काव्यशास्त्रे अभिधा लक्षणा व्यञ्जना चेति तिस्रो वृत्तयः स्वीक्रियन्ते । अभिधा वाच्यार्थप्रधाना, लक्षणा लक्ष्यार्थप्रधाना, व्यञ्जना व्यङ्ग्यार्थप्रधाना च ।

## शब्दव्यापारः

1. वाचकः - वाच्यार्थः - अभिधा
2. लक्षकः - लक्ष्यार्थः - लक्षणा
3. व्यञ्जकः - व्यङ्ग्यार्थः - व्यञ्जना

# ध्वनिशब्दस्य निर्वचनम्

ध्वनिशब्दो बहुधा निरुच्यते । तद्यथा –

- ध्वनति यः सः व्यञ्जकः शब्दो ध्वनिः ।
- ध्वनति, ध्वनयति वा यः स व्यञ्जकोऽर्थः ध्वनिः ।
- ध्वन्यते इति ध्वनिः । यद् ध्वन्यते इत्यनेन रसालङ्कारवस्तुरूपं व्यङ्ग्यार्थत्रयम् उपतिष्ठते ।
- ध्वन्यते अनेन इति ध्वनिः, इत्यनेन व्यञ्जनादिशक्तीनां ग्रहणम् । ध्वन्यतेऽस्मिन्निति ध्वनिः, इत्यनेन व्यङ्ग्यार्थप्रधानं काव्यमपि सङ्गृह्यते ।

एवं ध्वनिशब्देन व्यञ्जकशब्दस्य, व्यञ्जकार्थस्य, व्यञ्जनाव्यापारस्य, व्यङ्ग्यप्रधानकाव्यस्य च ग्रहणं सञ्जायते ।

वाच्यार्थापेक्षया व्यङ्ग्येऽर्थे मुख्ये सति ध्वनिरिति कथ्यते । तथाविधं च काव्यं सर्वोत्कृष्टं मन्यते –

इदम् उत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः । (काव्यप्रकाशः)

**Contd.....**

आनन्दवर्धनाचार्यः ध्वनिम् इत्थं लक्षयति –

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥

(ध्वन्यालोकः)

ध्वनेः मुख्यतया द्वौ भेदौ स्तः –

i. अभिधामूलो ध्वनिः - विवक्षितान्यपरवाच्यध्वनिर्वा ।
ii. लक्षणामूलो ध्वनिः – अविवक्षितवाच्यध्वनिर्वा ।

पुनः एतौ बहुधा इत्थं विभज्येते-

Contd.....

- ध्वनिः
  - अभिधामूलध्वनिः (विवक्षितान्यपरवाच्यम्)
    - लक्ष्यक्रमव्यङ्ग्यः
    - अलक्ष्यक्रमव्यङ्ग्यः
  - लक्षणामूलध्वनिः (अविवक्षितवाच्यम्)
    - अर्थान्तरसङ्क्रमितः
      - पदम्
      - वाक्यम्
    - अत्यन्ततिरस्कृतः
      - पदम्
      - वाक्यम्

शब्दशक्त्युद्भवः

- वस्तुध्वनिः
- अलङ्कारध्वनिः

अर्थशक्त्युद्भवः

- वस्तुध्वनिः (6 भेदाः)
- अलङ्कारध्वनिः (6 भेदाः)




प्रत्येकं वस्तुसिद्धः अलङ्कारसिद्धः इति 12 भेदाः ।

# ध्वनिकारेण ध्वनिभेदः इत्थं विभक्तः ।

- वस्तुध्वनिः ।
- अलङ्कारध्वनिः।
- रसध्वनिः ।

सूचनाप्रायेण आनन्दवर्धनाचार्यः ध्वन्यालोकस्य मङ्गलाचरणे श्लोके ध्वनित्रयं इत्थं न्यरूपयत् –

स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः ।
त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः ॥

